श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीवरवरमुनिभिः अनुगृहीतम्

# ॥ श्री नृसिंहाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

# ॥ श्री नृसिंहाष्टकम् ॥

श्रीमदकलङ्कपरिपूर्णशशिकोटि-
    श्रीधर मनोहर सटापटलकान्त।
पालय कृपालय भवाम्बुधि निमग्नं
    दैत्यवरकाल नरसिंह ! नरसिंह ! ॥ १ ॥

पादकमलावनतपातकिजनानां
    पातकदवानल पतत्रिवरकेतो।
भावन परायण भवार्तिहरया मां
    पाहि कृपयैव नरसिंह ! नरसिंह ! ॥ २ ॥

तुङ्गनख पङ्क्ति दलितासुरवरासृक्-
    पङ्कनवकुङ्कुमविपङ्किलमहोरः।
पण्डितनिधान कमलालय नमस्ते
    पङ्कजनिषण्ण नरसिंह ! नरसिंह ! ॥ ३ ॥

मौळिषु विभूषणमिवामरवराणां
    योगिहृदयेषु च शिरस्सु निगमानाम्।
राजदरविन्दरुचिरं पदयुगं ते
    देहि मम मूर्ध्नि नरसिंह ! नरसिंह ! ॥ ४ ॥

वारिजविलोचन मदन्तिमदशायां
    क्लेशविवशीकृतसमस्तकरणायाम्।
एहि रमया सह शरण्य ! विहगानां
    नाथमधिरुह्य नरसिंह ! नरसिंह ! ॥ ५ ॥

हाटककिरीटवरहारवनमाला-
    ताररशनामकरकुण्डलमणीन्द्रैः।
भूषितमशेष निलयं तव वपुर्मे
    चेतसि चकास्तु नरसिंह ! नरसिंह ! ॥ ६ ॥

इन्दुरविपावकविलोचन रमायाः
    मन्दिर महाभुजलसद्वररथाङ्ग !।
सुन्दर चिराय रमतां त्वयि मनो मे
    नन्दितसुरेश नरसिंह ! नरसिंह ! ॥ ७ ॥

माधव मुकुन्द मधुसूदन मुरारे
    वामन नृसिंह शरणं भव नतानाम्।
कामद घृणिन् निखिलकारण नयेयं
    कालममरेश नरसिंह ! नरसिंह ! ॥ ८ ॥

अष्टकमिदं सकलपातकभयघ्नं
    कामदमशेषदुरितामयरिपुघ्नम्।
यः पठति सन्ततमशेषनिलयं ते
    गच्छति पदं स नरसिंह ! नरसिंह ! ॥ ९ ॥

॥ इति श्री नृसिंहाष्टकम् समाप्तम् ॥